कल्याणी वर्धतां काले वर्धन्तां वैष्णवोत्तमाः ।
यद्वद्रिनाथो जयतु यद्वद्रिश्रीश्च वर्धताम् ॥



॥ स्तोत्रशाखा — पञ्चमं कुसुमम् ॥

श्रीशानुदासग्रन्थमाला - श्रीयादवगिरिः

श्रीयादवाचलनित्यनिवासरसिक — श्रीमदुभयवेदान्तप्रवर्तकाचार्य

साहित्यरत्न - सांख्यतीर्थ - बालधन्वि

# जग्गू-वेंकटाचार्यस्वामि-
# स्मारकग्रन्थमाला ।

(Prof. Jaggu Venkatacharya Memorial Volume)

Published by:— **Srisanudasa Granthamala,**
P. O. Melkote. (Mysore State)

क्रो. ध सं. श्रीकृष्ण जयन्ती, 31—8—1964.

मूल्यम् Rs. 3-00.

# Srisanudasa Granthamala, Melkote P. O.

This institution was started on the sacred day of Tiruvadippuram festival in Melkote in the year 1946, with a view to publish in Kannada script, the text and simple prose translations of the holy Tamil Hymns of the Alwars, so that the people of Karnataka—which gave shelter to the Great Sage, Sri Ramanujacharya, when he was forced to leave Tamilnad–might find out for themselves, the light, and bliss contained in the Four Thousand Divya Prabandhams, which find a unique place in World-Literature.

The complete works of St. Andal, Madhura-kavi, Tiruppanar and Thondaradippodi Alwar have been published. Tiruvasiriam of St. Nammal-war and Nityanusandhanam (a collection of select Hynns sung in daily worship by all Srivaishnavas) have also been presented to the people of Karnatak by the Granthamala. Essays on Vedic Religion and the glory of Sri Pancharatra Agama and the Mangalasasana Kritis of Prof. Sri Jaggu Venkatacharyar of Melkote have also been published.

The whole-hearted and generous co-operation of the public is solicited to publish the lives of the Alwars and all their Prabandhams.

**A. N. SRINIVASA IYENGAR,**
Hon. Editor

**AYANGAR NARASIMHACHAR,**
Manager

## * शुद्धाशुद्धपत्रिका *

Errata

| Page | Line | अशुद्धं | शुद्धं |
|---|---|---|---|
| vii | (II Para 2) | 1854 | 1954 |

Text

| | | | |
|---|---|---|---|
| 3 | 9 | पितुवचन.... | ....र्वचन... |
| 4 | 6 | अभि...स्त्वं | अभिषिक्तः ससीतस्त्वं |
| 20 | 9 | कर्कटेऽष्टम्य | ....अष्टम्यां अ |
| 22 | 7 | सवजन | सर्वजन |
| 25 | 6 | किरीटस्य | किरीटोद्ध.... |
| 33 | 22 | பெறு... | படு.... |
| 38 | 9 | இநவாயர் | இனவாயர் |
| | 13 | குலகுரு | குலதன |
| 40 | 3 | ,, | ,, |
| | 7 | வது... | வதூ... |
| 41 | 18 | நந்நடுவே | நம் நடுவே |

॥ श्रीः ॥

SA 146



श्री यदुगिरि-यतिराज-संपत्कुमारो भगवान् विजयते

॥ स्तोत्रशाखा – पञ्चमं कुसुमम् ॥

श्रीशानुदासग्रन्थमाला – श्रीयादवगिरिः

श्रीयादवाचलनित्यनिवासरसिक – श्रीमदुभयवेदान्तप्रवर्तकाचार्य

साहित्यरत्न - सांख्यतीर्थ - बालधन्वि

# जग्गू-वेंकटाचार्यस्वामि-स्मारकग्रन्थमाला ।

(Prof. Jaggu Venkatacharya Memorial Volume)

Published by:— Srisanudasa Granthamala,
P. O. Melkote (Mysore State)

क्रोधि सं. श्रीकृष्ण जयन्ती, 31—8—1964.

मूल्यम् Rs. 3-00.

HA 42

# विषयसूचिका — CONTENTS.



N. B. Translation of Varaha mangalam and other Stotras into Kannada will be appended.

# उपोद्घातः ।

—

"विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् । पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता" इत्युक्तप्रकारेण परमकारुणिको भगवान् अस्मभ्यं विचित्रकरणकलेबरसंपत्तिं सर्वथा स्वसमाराधनोपकरणतयैव प्रददाविति शास्त्रपद्धतिः । तदिदं सुष्ठु विदन्तोऽपि वयम "नृपशुः अशुभस्यास्पदम्" इति भगवद्यामुनार्योक्तरीत्या, "वृत्त्या पशुर्नरवपुस्त्वहम्" इति श्रीवरवरमुनीन्द्रोक्तरीत्या च प्रायः पशुप्राया एव वर्तामह इति तदिदमपरोक्षम् । "संसारविषवृक्षस्य द्वे फले अमृतोपमे । कदाचित्केशवे भक्तिस्तद्भक्तैर्वा समागमः ॥" इत्युक्तरीत्या विषवृक्षनिर्विशेषे संसारेऽप्यस्मिन् अमृतफलद्वितयोपमस्य भगवद्भक्ति--भागवतसमागमरूपस्य सुकृतयुगलस्य परमभाग्यव्यपदेशयोग्यस्य समयविशेषेषु भाजनभूता भवामो वयमिति तदिदमपि सर्वानुभवसाक्षिकम् ।

यदाकदाचिद्यदृच्छया घटमानमिदं सौभाग्यं यथाशक्ति विवर्धयितुमुत्सुका भवन्ति ये, त एव विवेकिव्यपदेशयोग्याः । ते खलु धीपूर्वमधीपूर्वमगत्या च संभवताम् अघानां परिहरणोपायचिन्ताविवशाश्च भवेयुः । अघं हि नाम न किमपि प्रात्यक्षिकं वस्तु । क्षणभङ्गुरमप्येतत्सद्यो भगवतश्चेतसि निग्रहसंकल्परूपतामाप्नोतीति गृह्यताम् । तादृशनिग्रहसंकल्पव्यपोहनपूर्वकमनुग्रहसंकल्पप्रजननायैव सर्वथाऽस्माभिः प्रयतितव्यमिति परमकृपयोपदिशन्ति परमगुरवः । तत्तादृशप्रयत्नफलभूतेष्वभ्युपायेषु भगवत आचार्याणां च स्तवनमेव मूर्धन्यमिति

प्राज्ञाः प्राहुः। सभक्तिकमभक्तिकं वा क्रियमाणा स्तुतिः क्षिप्रं देव-प्रसादने प्रकल्पत इत्यप्याहुः। स्वोपज्ञस्तोत्रानुसन्धानतोऽपि अभिज्ञ-बहुज्ञसर्वज्ञमहामतिकृतस्तोत्रानुसन्धानं फलातिशयनिदानमिति चाभिद-धत्यन्तर्वाणयः।

श्रीमद्यादवाद्र्यभिजनः श्रीशानुदासग्रन्थमालासम्पादको विद्वान् अस्मत्प्रियसुहृन्मणिश्च श्रीमान् श्रीनिवासाचार्यवर्यो निजविद्यावैभवं परोपकारात्मना परिणमयितुकामः स्तुतिकदम्बकमिदं सम्मुद्र्य प्रकाशयन् पवित्रजन्मा प्रशंसनीयजन्मा च बोभवीति सत्यम्। भगवद्रामानुजार्यकटाक्षभूम्ना परम्परया विद्वद्वराध्युषिते श्रीमति यादवाद्रौ नित्यं स्मरणीयकीर्तयो विद्वत्कविवरिष्ठाः श्री. उ. वे. जग्गू वेङ्कटाचार्यस्वामिपादा व्यराजन्तेति जानन्ति प्रायो विद्वांसः। तेषां सकाशे संगृहीतनानाविद्योऽसौ श्रीनिवासाचार्यो "गुरुं प्रकाशये-द्धीमान्" इति शास्त्रमन्वर्थयन् तेषां स्तुतिकृतीः प्राधान्येन, अन्येषां च श्रीमच्छ्रीशैलानन्तपुरुष-पुरिशैस्वामिपादप्रभृतीनां च कृतीः प्रकाशयन् अप्रमेयमुपकारमाहितवान् भवति। भक्तिभाजां सर्वस्व-मिति व्यपदेष्टुमर्हं तदिदं पुस्तकं सर्वेऽपि विपश्चितो भक्ताश्च भृश-माद्रियेरन्निति विश्वसिमो विरमामश्च॥ .... *

इति निवेदयति

श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यः, महाविद्वान्

३—५—६४.

॥ श्रीः ॥

॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

# * आशीर्वचनम् *

—:*:—

श्रीमताम् पंडितरत्नम् सांख्यतीर्थेत्यादि बिरुदभूषितानाम् महाविदुषां जग्गू वेंकटाचार्याणां ग्रन्थप्रकाशनोदन्तमाकर्ण्य सुतरां संतुष्टान्तरङ्गोऽयं जनः ॥

एते हि महानुभावाः आबाल्यात् श्रीयादवाद्रि-क्षेत्र-निवास-रसिकाः प्रसिद्ध-गुरुवर-चरण-सेवापरायणाः सांख्यादितंत्रेषु प्रज्ञां संपादितवन्तः । साहित्ये परां काष्ठामापन्नाः तत्रैव शालायां बहून् विद्यार्थिनोऽध्यापयंतः संस्कृतवाङ्मयस्य बहुविधाम् सेवाम् निरवर्तयन्निति प्रमोदस्थानम् । एतादृशः महान्तः शार्वरिवत्सरे कर्काटकमासे प्राकृतं वपुर्विजहुरिति परं विषादस्थानम् ॥

यशःशरीरा इमे स्मृतिपथमधिरूढाः पदेपदे "श्रुत्वा मध्यं जगामेव मनसा दुःखहर्षयो"रिति दशामापादयन्तीति नात्युक्तिः ॥

ईदृशपंडितप्रवरग्रंथप्रकाशनेन सर्वेषामेव सहृदयानां हृदयानि प्रमोदजलधौ निमग्नानि भवेयुरित्यत्र नास्ति संशयः । एतत्कैंकर्यप्रवृत्ताः श्री आ. न. श्रीनिवास ऐयङ्गार्यः निष्प्रत्यूहं कार्यजातं संपादयंतः भगवतः श्रीयादवाचलादिदिव्यक्षेत्र-निवासशीलस्य रमाकांतस्यानुग्रहभाजनं भूयासुरिति सानंदमावेदयति-

इति भागवतचरणरेणुः

आत्मकूरुदीक्षाचार्यः ।

श्रीमन्महीशूर संस्कृतमहापाठशालाविश्रांतविशिष्टाद्वैत दर्शनप्राध्यापकाः, महाविद्वांसः ॥

---

श्रीशानुदास ग्रन्थमाला, श्रीयादवगिरिः, मैसूर संस्थानम्।

# ॥ प्रकटनम् ॥

---

श्रीयदुशैलेश प्रचोदनात् भारतराष्ट्रस्य स्वातन्त्र्यसूर्योदयात् पूर्वक्रि श. 1946-तमे संवत्सरे श्रीमद्-यदुशैलनायकीगोदादेव्योः आविर्भावोत्सवमहादिने अवतीर्णायाः ग्रन्थमालायाःप्रकटणानिः-

1. तिरुप्पावै, 2. नाच्चियार तिरुमोळि, (नायकीगीता) 3. तिरुमालै, 4. नित्यानुसंधानम्, 5, तिरुवाशिरियम्, 6. धर्मस्यमर्म (प्रबंध चतुष्टयं), 7. भारतकृष्ण मङ्गलम् 8. श्रीयतिराज मङ्गलम्, 9. श्रीपाञ्चरात्रगमस्य जन्म वैभवं च, 10. भगवन्-मङ्गलाशासनप्रबंधावलिः

कर्णाटक भाषायां द्राविडब्रह्मसूक्तीनां अनुवादः दिव्यसूरि परंपराप्रभावस्य प्रकाशनं स्तोत्रप्रकाशनम् आगमधर्ममहिमानु-वर्णनं काव्यशास्त्रविज्ञानव्यासप्रकाशनम् च अस्या ग्रन्थमालायाः श्लाघनीयाः उद्देश्याः। एतत्साधनार्थम् भारतमातुः सुपुत्रानाम् श्रीमताम् राष्ट्रभाषासाहित्यसेवापरायणानाम् उदारहृदयानां दानशूराणाम् सहकारहस्तावलंबनम् सप्रश्रयं अभ्यर्थ्यते ॥

इति निवेदयति,

आयङ्गार् नरसिंहाचार्यः

दोड्डयाचार वीथी, मेल्कोटे P.O., मैसूर स्टेट.

---

SRISANUDASA GRANTHAMALA,

(P.O.) MELKOTE. : : MYSORE STATE.

# AN APPEAL

**Centenary Souvenir of the Samskrit College, Melkote, (Thirunarayanapuram).**

---

Sri Veda Vedanta Bodhini Sanskrit College, Melkote, which is housed in the holy Devasthanam premises of Sri Yadugiri Narayana, worshipped by the great Ramanujacharya, the apostle of Vishnu Bhakthi and Prapathi, in the early decades of the twelfth century A. D., is the oldest SamskritCollege in the Mysore State, being founded by the pious local Scholars, in the year 1854, for the purpose of imparting instructions to their youth in Samskrit literature, Veda, Vedanta, Agamas, Divya Prabandas and other Sastras, and equip them with knowledge, necessary to serve the Lord. It was patronised by the Royal family of Mysore, right from the time of the late H. H. Sri Krishnaraja Wadiyar III, and maintained by their government, and is reckoned a major Samskrit College in the State. Many of its illustrious professors and students have earned all-India fame, by their various activities, such as publications in Samskrit, Tamil, English, Kannada, Hindi etc.

Thus this College has lived a purposeful life all these years. During its Centenary year (1954), Bharata-ratna Sri Babu Rajendra Prasad, of revered memory, the first President of the Republic of India, visited the College on the Gokulashtami day, and being pleased with its work, made a voluntary donation of a sum of One thousand Rupees, for instituting an annual prize to be

awarded to the best student of the College, who passes the Vidwat Examination with distinction.

Now, this great College, the *alma-mater* of many an illustrious son of India, is completing its 110th year. It is proposed to celebrate this occasion in a befitting manner by the publication of a *Souvenir*, which will shed lustre, not only upon the history of this institution, but also upon the greatness of this Kshetra, which was so dear to Bhagavan Sri Ramanujacharya, that He ordained His disciples, through His charama-sandesha (final message) to go to this Kshetra (Melkote) and dwell there peacefully, in a hermitage.

All the lovers of Samskrit Language and Literature of our holy religion and culture and of this great spiritual centre of India, are hereby requested to contribute liberally to the success of this publicati on, (the Centcnary Souvenir) by kindly sending (i) articles suited to the occasion and (ii) financial support to the following address:

(1) Sri AYENGAR NARASIMHACHAR,
Manager, Srisanudasa Granthamala,
76, Sri Dodiachar St., P.O. Melkote, Mysore State.

(2) Sri A. N. SRINIVASA IYENGAR, B.SC, HONS.
Hon. Editor,
"Sri Goda Mandiram"
No. 34, IX Cross Road, Swimming Pool Extention,
Malleswaram P. O., Bangalore - 3.

# ACKNOWLEDGEMENT



It is with great pleasure that I am offering my humble tribute of thanks for the manifold services rendered to me in the publication of this Memorial Volume dedicated to the eminent scholar of Melkote, Sri U. Ve. Sahitya Ratnam Jaggu Venkatacharyaswamy, who reviewed the commentaries on *Rasagangadhara* and Kuvalayanandachandrika with such a keen sense of literary criticism, that he won the approbation of scholars of repute all over India.

First and foremost, it is my duty to offer my grateful thanks to H. H. Sri Kanchee Vadikesari Azhahiya Manavala Jiyar Swamy for his Kannada Introduction, Sri U. Ve. Mahavidvan P. B. Annangaracharya Swamin of Kancheepuram for the keen interest evinced by him in correcting, editing and publishing this volume and his erudite scholar-son-in-law and my esteemed friend, Sri U. Ve. Vidvan T. A. Akkarakkani Sampthkumaracharyar, M. A., of Melkote, who very kindly bore the brunt of work when this was in the press.

Sri P. B. Annangaracharya Swamiji has also favoured me with his Sanskrit foreword—उपोद्घातं which brings out in telling words the efficacy of singing Stotras in eradicating our sins. Sri U. Ve. Mahavidvan Karappangadu Venkatacharyaswamy has very kindly contributed in his easy chaste style a Tamil article on the essence of Gayatri Mantram, the most hallowed Mantram in Vedic Literature.

Bra. Sri 'Agamaratnam' Talakadu Krishna Dixitar, the Hon. Editor of the popular religious

monthly of Bangalore, *The Dharma Sandesha*–'धर्म सन्देश', readily agreed to publish in his periodical the Kannada text and translation of Sri Varahamangalam etc., and give me off-prints for the Memorial Volume. He has also kindly edited in Kannada *my "Hastigirisa Stuti"* with Kannada translation in the last three issues of *Darmasandesha* (June, July and August, 1964).

Sri T. N. C. Narasimhacharyar of Kancheepuram has kindly permitted me to use the block of Sri Sampathkumaraswamy and the Editor of *Bhaktan*, Madras, has permitted me to use his block of Sri Varadaraja with Mahadevi in this publication, which also contains the Sanskrit Text of Sri Yatiraja Mangalam of my Master to whom this book is dedicated. The block of Sri *Kancheepurna* (Thirukkachinambi) was made out of a recent photograph taken by my young friend of Bombay, Chi M. N. Ramanujan. May God bless him! This picture of *Sri Kancheepurna*, the famous devotee of Sri Kanchee Varadarajaswami, is published for the first time.

I am tendering hereby my grateful thanks for the various services rendered by the scholars, journals and friends mentioned above. The Kannada portions of the Volume were printed in the Prabha Printing Press of Bangalore and the Sanskrit, English, Tamil & Hindi portions were printed in the Sri Venkateswara Press, L. Kancheepuram. My thanks are also due to the workers in these Presses and to my friend Sri H. S. Ramasamy, B.O.L. of Srivatsa Press, Madras for printing Sri Yatirajamangalam and some recent additions in Kannada.

A list of Donors who have contributed towards the cost of publication of this Memorial Volume upto 31-7-1964 is given below this volume. To all of them I offer my heart-felt thanks.

I PATRON — Rs.

Sri U. Ve. K. Gopalan, B.A., The Hindu, Madras 25

II DONORS

MELKOTE — Rs.

1. Sri U. Ve. B. V. Raghavacharyaswami 10
2. ,, Vidwan T. A. Sampathkumaracharyar, M.A. 5
3. Sri M. B. Shelvanarayanan 5

THANGLI, KADUR DT. — Rs.

4. Sri Sowcar T. N. Krishnaswamy Iyengar 10

KANCHEEPURAM

5. Sri U. Ve. Mahavidwan P. B. Annagaracharyar swami 10

MADRAS — Rs.

6. Sri M. M. Parthasarathy (alias) Sadagopan 3
7. ,, M. B. Shama Iyengar 2
8. ,, M. G. Srinivasan 2
9. ,, M. A. Krishnaswamy 1
10. ,, T. K. Rajagopalan 1
11. ,, R. A. Narayana Iyengar 1

HYDERABAD

12. ,, M. S. Ramaswamy Iyengar, B.A. 10

MYSORE — Rs.

12. Sri U. Ve. Prof. M. T. Ramaswamy Iyengar 10
13. Sarva Sri M. Doraswamy Iyengar, B.E. 10
14. ,, N. A. Sampathkumaracharyar, B.A. 5

| | | | |
|---|---|---|---|
| 15. | ,, | Arakare Gomatam S. Varadachar | 2 |
| 16. | ,, | Arakare Sampathkumaracharya | 2 |
| 17. | ,, | P. T. Srinivasa Iyengar | 1 |
| | | **BANGALORE** | Rs. |
| 18. | ,, | M. N. Varadachar, Hon. Secy. U. V. P. Sabha | 10 |
| 19. | ,, | M. G. Singracharyar | 5 |
| 20. | ,, | K. Ramaswamy Iyengar | 5 |
| 21. | ,, | R. Krishna Iyengar | 2 |
| 22. | ,, | D. L. N. Acharya | 2 |
| 23. | | Realisation by sale of Books | 16 |
| | | Total Rs. | 155 |

The response expected from the Kannada public to the publication of a work dedicated to the memory of a distingished scholar of the eminence of Sri U. Ve. Sahitya-Ratnam Jaggu Venkatacharyaswami is not at all encouraging. Our men should take more lively interest in the publication of works by our contemporary scholars and contribute liberally towards the same, eschewing all petty differences of opinion.

This Memorial volume is my humble tribute to my Master who passed away on the Gokulashtami day inthe year 1960. May his erudition, piety and earnestness in Kainkaryam to the Lord, Acharyas and Devotees lead us to the path of peace and eternal happiness! Amen!!

Tirunarayanapuram,
Melkote, P. O.
31—8—1961

**A. N. SRINIVASA IYENGAR,**
Hon. Editor
Srisaanudasa Granthamala



मङ्गलं वेधसोवेदिमेदिनीगृहमेधिने ।
वरदाय दयाधाम्ने धीरोदाराय मङ्गलम् ॥



श्रीकाञ्चीवरदराजप्रभुः : : Kanchee Varadarajar

Courtesy of D. Ramaswamy Iyengar

॥ श्रीः ॥

श्रीकाञ्चीपूर्णः (Tirukkacchi Nambigal)

कुम्भे मृगशिरोजातं श्रीकाञ्चीपूर्णमाश्रये ।
षट्सूक्तिं यतिराजाय यन्मुखाद्वरदोऽब्रवीत् ॥



SRISANUDASA GRANTHAMALA,
MELKOTE P. O.

॥ श्रीः ॥



॥ श्रीमते रामानुजाय नमः ॥

# ॥ निवेदनम् ॥

[ संपादकस्य ]

श्रीमद्यादवशैलेश-क्षीरकैंकर्यशालिने ।
श्रीशानुदासमुनये जनन्यार्याय मङ्गलम् ॥

जीयाद्रामानुजाचार्यो यदुशैलपतेः पिता ।
नारायणप्रतिष्ठाता हरिभक्तिसुधानिधिः ॥

यदुशैलेशमात्रे च जनकाय हरेः शुभम् ।
श्रीशानुदासगुरवे यतिराजाय मङ्गलम् ॥

विष्णुचित्तात्मजां गोदां प्रपन्नकुलदीपिकाम् ।
रङ्गेश्वरवधूं वन्दे रामानुजवरानुजाम् ॥

मुग्धस्मेरमुखांभोजम् इन्दिरायाः पदांबुजम् ।
वराभयदहस्तौ नः पान्तु सर्वत्र सर्वदा ॥

यद्वाद्रिवासरसिकं प्रणमामि नित्यं
नारायणं निखिललोकपरायणं तम् ।
श्रीशानुदासगुरुवर्यसमर्पितं यो
क्षीरं मुदा परमया कृपया व्यगृह्णात् ॥

अनिरुद्धस्य मकुटं धृत्वा रत्नविभूषणम् ।
यदुशैलपतिर्जीयात् यतिराजसुतो हरिः ॥

इक्ष्वाकोः कुलनाथस्य कृष्णस्य च महात्मनाम् ।
भाग्यस्य सुकुमारस्य कृपया वोऽस्तु मङ्गलम् ॥

उपासिता हयास्यस्य लक्ष्मणार्यमतानुगः ।
यद्वाद्रिवासनिष्ठोऽभूत् जग्गूवेङ्कटदेशिकः ॥

अस्य पंडितरत्नस्य लेखनानि कियन्ति च ।
विमर्शनं च ग्रन्थानामत्र सन्ति बुधोत्तमाः ॥



# * द्वादशनामस्तोत्रम् *

श्रीमत्परमहंसेत्यादि–श्रीरङ्गविमानस्वर्णलेपनकैंकर्यनिर्वाहकैः
श्रीरङ्गनारायणमुनिभिरनुगृहीतम्

राम ! दाशरथे ! श्रीमन् ! भरतप्रिय ! शत्रुहन् ! ।
सुग्रीवमित्र ! लंकाग्ने ! राजन् ! दिव्य ! नमोऽस्तु ते ॥ १ ॥

श्रीमन् ! वरद ! देवैस्त्वं ब्रह्माद्यैः प्रार्थितो दिवि ।
अवतीर्णो दशरथात् लोकत्राणाय **केशव** ! ॥ २ ॥

पितुर्मते स्थितो राम ! सानुजः कौशिकं गतः ।
तदध्वरमरक्षस्त्वं **नारायण** ! रिपोर्वधात् ॥ ३ ॥

जनकस्य मखे भङ्क्त्वा दुरारोपं परैर्धनुः ।
सहधर्मचरीं सीतां प्राप्तस्त्वं **माधव** श्रियम् ॥ ४ ॥

कैकेय्याः प्रियभर्तुस्त्वं पितुवचनगौरवात् ।
अभिषेकं हि **गोविन्द** ! त्यक्त्वा प्राप्तो वनं मुदा ॥ ५ ॥

गुहं कृतार्थं कुर्वंस्त्वं चित्रकूटं गतो गिरिम् ।
पादुके भरतायादाः **विष्णो** ! सर्वाभिरक्षके ॥ ६ ॥

विराधस्य खरादीनां तमसामिव भानुमान् ।
छेत्ता गृध्रभवस्यापि विभासि **मधुसूदन** ! ॥ ७ ॥

सुग्रीवेण कृपावत्यै सीतायै प्रेषितः कपिः ।
त्रिविक्रमाब्धिं ववृधे लङ्घितुं त्वमिवाध्वरे ॥ ८ ॥

लङ्कां विचित्य हनुमान् त्वद्रूपो वामनाखिलाम् ।
सीतां दृष्ट्वाऽक्षतां देवीं जगाद च तव प्रियम् ॥ ९ ॥

प्रपन्नाभयदायी त्वं रावणादीन्निहत्य च ।
अभिषिक्तस्ससीतस्त्वं श्रीधरासो महीमिमाम् ॥ १० ॥

पारतन्त्र्यप्रकाशाय त्वद्विहीनाऽपि जानकी ।
गङ्गायां नाजहत्प्राणान् हृषीकेश तव प्रिया ॥ ११ ॥

ब्रह्मादीनां च सर्वेषाम् पश्यतां जानकी तव ।
प्रकाश्यानन्यशेषत्वं पद्मनाभ भुवं गता ॥ १२ ॥

त्वं चिरात्परिपाल्याथ साकेतं तच्चराचरैः ।
ब्रह्माद्यभिष्टुतः प्राप्तः नाकं दामोदर स्वकम् ॥ १३ ॥

एतद्-द्वादशनामार्थ ! देवराज ! वरप्रद ।
सर्वदा तव सर्वं च सर्वेभ्योऽपि भवेच्छुभम् ॥ १४ ॥

———

श्रीमदित्यादि - विद्वत्सार्वभौम - ति. अ. पुरिशै (तिरुपति)
श्रीरङ्गाचार्यस्वामिपादैरनुगृहीतं

# ॥ उज्ज्वल वेङ्कटनाथ स्तोत्रम् ॥

श्री वेंकटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभंगुरविभूतिर्नस्तरङ्गयतु मंगलम् ॥

ज्वलितनानानागशृंगग मणिगणोदित सुपरभागक
घननिभाभाभासुरांगक वृषगिरीश्वर! वितर शं मम,
सुजनतातातायिताखिलहितसुशीतलगुणगणालय
विस्मराराराद्रुदित्वर रिपुभयंकर करसुदर्शन,
सकलपापापारभीकर घनरवाकर सुदरसादरं
अवतु मामामाघसंभृत मगणनोचितगुणरमेश्वर,
तवकृपापापाटवीहतिदवहुताशन समहिमा ध्रुवं
इतरथाथाधारमस्त्यघगणविमोचनमिह न किंचन ॥ (१)

नगधराराराधने तव वृषगिरीश्वर य इह सादरं
रचितनानानामकौसुमतरुलसन्निजवनविभागज-
सुमकृतांतांतां शुभस्रजमुपहरन् सुखमहिपतिर्गुरुः
अतिरयायायासदायक भवभयानकशठरिपोः किल
निगमगागागायता यतिपरिबृढेन तु रचय पूरुष
जितसभोभोभोगिराङ्गिरिपतिपदार्चनमिति नियोजितः
इह परंरंरम्यतेस्म च तदुदितव्रणचुबुकभूषणे
इह रमे मे मेघरोचिषि भवति हारिणि हृदयरंगग ॥ (२)

गतभयेयेये पदे तव रुचियुता भुवि वृषगिरीश्वर
विदधते ते ते पदार्चनमितरथा गतिविरहिता इति,

मतिमतातातायिते त्वयि शरणतां हृदि कलयता, परि-
चरणयायाया यता तव फणिगणाधिपगुरुमहात्मना,
विरचितांतांतां वनावलिमुपगते त्वयि विहरति,-द्रुम-
नहनगांगांगामिव श्रियमरचयत्तव स गुरुरस्य च,
तदनु तां तां तां रमां परिजनगिरा द्रुतमवयतो निज-
शिशुदशाशाशालिनीमपि वितरतो वर वितर शं मम ॥ (३)

ममतयायायाविला मतिरुदयते मम सपदि तां हर
करुणया यायाशुभा मम वितर तामयि वृषगिरीश्वर,
सदुदयायाया समृच्छति न दरमप्यरिविदलनादिषु
मदुदयायायासमीप्ससि ननु कथं मम रिपुजयाय च,
मयि दयायायासिकेन तु न पदतां ननु निगद तन्मम
मम विभो भो भोगिनायकशयन मे मतमरिजयं दिश,
परमयायायाद्या तव निरवधिं मयि झडिति तामयि
सुमहिमा मामाधव क्षतिमुपगमत्तव मम कृतेऽनघ ॥ (४)

घटितपापापारदुर्भट पटलदुर्घट निधनकारण
रणधरारारात्पलायन निजनिदर्शित बहुबलायन,
दरवरारारावनाशन मधुविनाशन मम मनोधन,
रिपुलयायायाहि पाहि न इदमरं मम कलय पावन,
सुतरसासासारदृक्तिरतिशुभा तव निपतताम्मयि
सहरमो मोमोत्तु सन्ततमयि भवान्मयि वृषगिरावपि,
प्रतिदिनं नंनम्यते मम मन उपेक्षिततदपरं त्वयि
तदरिपापापासनं कुरु वृषगिरीश्वर सततमुज्वल ॥ (५)

उज्वलवेंकटनाथस्तोत्रं पठतां ध्रुवारिविजयश्रीः ।
श्रीरङ्गोक्तं लसति यदमृतं सारज्ञहृदयसारंगे ॥

# ॥ भारत कृष्ण मङ्गलम् ॥

साहित्यरत्नम् श्री. उ. वे. जग्गू वेंकटाचार्य विरचितम्

——:x:——

## आदि-पर्व

अनुग्रहाय भक्तानां तद्द्विषां निग्रहाय च ।
अवतीर्णाय भूभागे वासुदेवाय मङ्गलम् ॥

आजानक्लेशमग्नास्ते कौन्तेया यत्प्रसादतः ॥
कृष्णां राज्यं सुखं चापुः तस्मै कृष्णाय मङ्गलम् ॥ २ ॥

## सभा-पर्व

सर्वकर्मसमाराध्यः तद्विघ्नविनिवर्तकः ।
भक्ताङ्घ्रिशोधको यश्च तस्मै कृष्णाय मङ्गलम् ॥ ३ ॥

सनाथाऽपि विनाथेव कृष्णा कृष्टा सभान्तरे ।
यन्नामकीर्तनात् त्राता तस्मै कृष्णाय मङ्गलम् ॥ ४ ॥

## वन-पर्व

पार्थेभ्यो वनवासिभ्यो द्रोग्धुं दुर्योधनेरितः ।
निरस्तो येन दुर्वासाः तस्मै कृष्णाय मङ्गलम् ॥ ५ ॥

## विराट-पर्व

अज्ञातवासनिश्श्रीकाः पार्था यद्दत्तसम्पदा ।
सौभद्रोपयमं चक्रुः तस्मै कृष्णाय मङ्गलम् ॥

## उद्योग-पर्व

सौलभ्यपरिपूर्णाय परात्परतराय च ।
दूताय पाण्डुपुत्राणां सिद्धधर्माय मङ्गलम् ॥ ७ ॥

भीष्म-पर्व

सर्वशास्त्रमयीम् गीतां यो ददौ बन्धमुक्तये ।
पार्थव्याजेन नः तस्मै पार्थसूताय मङ्गलम् ॥ ८ ॥

भीष्मबाणातिविद्धाय क्रुद्धायाप्लुत्य धावते ।
स्विन्नाय चक्रहस्ताय धूलिधूसरपक्ष्मणे ॥ ९ ॥

स्रस्तपीताम्बरदशां कर्षते भूतले मुहुः ।
परिष्वक्ताय भीष्मेण फुल्लपङ्कजचक्षुषे ॥ १० ॥

पार्थेन पुनरानीय स्थापिताय निजे रथे ।
घातयित्रेऽथ भीष्मस्य मेघश्यामाय मङ्गलम् ॥ ११ ॥

द्रोण-पर्व

अतिश्रान्तान् पार्थरथ्यान्मध्यान्हे युद्धमध्यगान् ।
पश्यत्सु सर्ववीरेषु सरो निर्माप्य निर्मलम् ॥ १२ ॥

संस्नाप्य पाययित्वा च नीरुजानकरोत्तु यः ।
सर्वसंमोहकायास्तु तस्मै कृष्णाय मङ्गलम् ॥ १३ ॥

पिधाय भानुं चक्रेण रात्रीकृत्य दिनं तु यः ।
अमारयत्सिन्धुराजं तस्मै कृष्णाय मङ्गलम् ॥ १४ ॥

घातिनीमेकवीरस्य शक्तिम् संप्रार्थ्य वासवात् ।
लब्धां कर्णेन सुचिराद्रक्षितां हन्तुमर्जुनम् ॥ १५ ॥

हैडिम्बेये यातुधाने रात्रियुद्धे घटोत्कचे ।
पातयित्वाऽर्जुनं गोप्त्रे तस्मै कृष्णाय मङ्गलम् ॥ १६ ॥

प्रयुक्ते भगदत्तेन वैष्णवास्त्रेऽर्जुनं प्रति ।
यःस्वोरसा दधाराशु तस्मै कृष्णाय मङ्गलम् ॥ १७ ॥

अश्वत्थामवधं द्रोणं श्रावयित्वा युधिष्ठिरात् ।
योऽघातयत् स्वाश्रितार्थे तस्मै कृष्णाय मङ्गलम् ॥ १८ ॥

नारायणास्त्राद्यो द्रौणिप्रयुक्तात्सर्वसैनिकान् ।
ररक्ष क्षिप्तसामग्रींस्तस्मै कृष्णाय मङ्गलम् ॥ १९ ॥

कर्ण-पर्व

कर्णबाणातिविद्धेन सुप्तेन शिबिरे स्वके ।
धर्मपुत्रेण गाण्डीवे निन्दिते धनुषि स्वके ॥ २० ॥

स्वप्रतिज्ञानुसारेण च्छेत्तुं यौधिष्ठिरं शिरः ।
उद्यतासिं तु विजयं सूक्ष्मधर्मोपदेशतः ॥ २१ ॥
समाधायाग्रजस्यापि धिक्कारं स्वात्मनस्स्तुतिम् ।
यः कारयित्वाऽरक्षद्द्वौ तस्मै कृष्णाय मङ्गलम् ॥ २२ ॥

कर्णप्रयुक्ते सार्पेऽस्त्रे कण्ठमुद्दिश्य वासवेः ।
रथमाक्रम्य भारेण पातयित्वाऽथ जानुना ॥ २३ ॥

वाहान् किरीटमात्रं यो हारयित्वा ररक्ष तम् ।
समयोचितधीभूम्ने तस्मै कृष्णाय मङ्गलम् ॥ २४ ॥

रथचक्रं भुवा ग्रस्तमुद्धरन्तं रवेस्सुतम् ।
अनिच्छताऽपि पार्थेन घातयित्रेऽस्तु मङ्गलम् ॥ २५ ॥

शल्य-पर्व

बलक्षयात् ह्रदेमग्नमुत्थाप्य तु सुयोधनम् ।
मर्यादामप्यतिक्रम्य भीमेन गदया मृधे ॥ २६ ॥

संज्ञाप्य भेदयामास यस्सुयोधनसक्थिनी ।
भीमसन्धासमाधाते तस्मै कृष्णाय मङ्गलम् ॥ २७ ॥

अष्टादशेऽहनि रणे पूर्णे शिबिरमागते ।
सायं रथे पूर्वमेव योऽवतार्यार्जुनं ततः ॥ २८ ॥

अवप्लुत्य रथात्तस्मा त्साश्वाद्भस्मीकृता त्क्षणात् ।
ररक्षार्जुनमेकाग्रस्तस्मै कृष्णाय मङ्गलम् ॥ २९ ॥

सौप्तिक-पर्व

वराद् रुद्रस्य सर्वस्मिन्निशि सुप्ते बले हते ।
द्रौणिना निशि पञ्चानां रक्षकायास्तु मङ्गलम् ॥ ३० ॥

स्त्रीपर्व

भीमं निरस्य प्रणतम् आयसं तं निधाय यः ।
ररक्ष भीमं जात्यन्धात् तस्मै कृष्णाय मङ्गलम् ॥ ३१ ॥

शान्ति-पर्व

शरतल्पगताद्भीष्मा दशक्तादपि शक्तिदः ।
योऽश्रावयत्सर्वधर्मांस्तस्मै कृष्णाय मङ्गलम् ॥ ३२ ॥

आनुशासनिक-पर्व

द्रौणिब्रह्मास्त्रनिर्दग्ध मृतजातोत्तरासुतम् ।
योऽजीवयत्पुनस्तस्मै सर्वशक्ताय मङ्गलम् ॥ ३३ ॥

आश्रमवासिक, मौसल, महाप्रस्थान, स्वर्गारोहण-पर्वाणि

सर्वभूभारनिर्हर्त्रे हित्वा स्वपरवेचनम् ।
निरंकुशस्वतन्त्राय तस्मै कृष्णाय मङ्गलम् ॥ ३४ ॥

मङ्गलं सूरिसेव्याय श्रीभूनीलाविहारिणे ।
परस्मै वासुदेवाय नित्यानन्दाय मङ्गलम् ॥ ३५ ॥

निगमनम्

वालधन्विकुलोद्भूतशिङ्गरार्यतनूभुवा ।
यद्विद्रिनित्यवासेन वेङ्कटार्येण सम्भृतम् ॥ ३६ ॥

भारतप्रतिपर्वस्थस्वकथारसमेदुरम् ।
मङ्गलम् स्वादयित्रे च तस्मै कृष्णाय मङ्गलम् ॥ ३७ ॥

रामानुजार्यसेव्याय नित्यं यद्वद्रिवासिने ।
भक्तानुग्रहदीक्षाय सम्पत्पुत्राय मङ्गलम् ॥ ३८ ॥

॥ श्री कृष्णाय नमः ॥

---

# * श्री वराह मङ्गलम् *

जलपङ्कभिया हीनं वाराहं बिभ्रते वपुः ।
उद्धर्तुं पृथिवीं मग्नामवगाढाय मङ्गलम् ॥ १ ॥

वेदाङ्गसंभृताङ्गाय सर्ववेदतनूभृते ।
सामघुर्घुरघोषाय श्रीवराहाय मङ्गलम् ॥ २ ॥

ऋत्वङ्गपूरिताङ्गाय सर्वक्रतुशरीरिणे ।
उद्गीथराविणे तुभ्यं भूवराहाय मङ्गलम् ॥ ३ ॥

उद्धृत्य भूमिं पाताळादुरसाऽऽलिङ्ग्य जिघ्रते ।
मूर्ध्नि तां प्रीणयित्रे स्यान्महाक्रोडाय मङ्गलम् ॥ ४ ॥

कुक्षिस्थवल्लयाम्भोधिजलेन विधुतेन तान् ।
पुनानाय जनोलोकमुनीन् क्रोडाय मङ्गलम् ॥ ५ ॥

रोमान्तरगतैर्ब्रह्मसुतैस्सनकपूर्वकैः ।
स्तुताय श्रुतिसूक्तैस्ते भूवराहाय मङ्गलम् ॥ ६ ॥

फूत्कारोद्यल्लयाम्भोधिजलक्लिन्नांडभित्तये ।
महादिव्यवराहाय भूयात् सतत मङ्गलम् ॥ ७ ॥

अण्डभित्तेस्समुत्थाय तथा प्रलयवारिधेः ।
दंष्ट्रया बिभ्रते पृथ्वीं स्वात्माधाराय मङ्गलम् ॥ ८ ॥

लयाम्भोधेर्यथा पृथ्वीं भवाम्भोधेस्तथैव माम् ।
समुद्धर्त्रे दयाम्भोधे ते वराहाय मङ्गलम् ॥ ९ ॥

रक्षित्रे निरपेक्षाणामपि कारुण्यमूर्तये ।
हिरण्याक्षनिहन्त्रे स्याद्भूवराहाय मङ्गलम् ॥ १० ॥

सकृत्स्मरणमात्रेण नरमन्ते निनीषते ।
स्मृत्वा गतिं परमिकां भूवराहाय मङ्गलम् ॥ ११ ॥

स्वाङ्गस्वेदजलापूर्णकल्याणसरसस्तटे ।
प्राचि वामाङ्कसुस्थायै चरमश्लोकयोर्द्वयम् ।
उपदेष्ट्रे भूमिदेव्यै श्रीवराहाय मङ्गलम् ॥ १२ ॥

॥ इति श्री वराह मङ्गलम् ॥

# ॥ श्रीनृसिंह मङ्गलम् ॥

सत्यं भक्तवचः कर्तुं व्यक्तये सर्वत्र च स्थितेः ।
हिरण्यकशिपुस्पृष्टस्तंभोद्भूताय मङ्गलम् ॥ १ ॥

व्यात्तदंष्ट्राकरालास्यलोलज्जिह्वाक्षिगर्जनैः ।
जडीकृतहिरण्याय तादृशोग्राय मङ्गलम् ॥ २ ॥

वरदेहतपोवीर्यैं रवध्यं सर्वदेहिनाम् ।
दैत्यं नखैर्दलयते तस्मै वीराय मङ्गलम् ॥ ३ ॥

द्यावाभूमी दिशास्सर्वास्स्वाङ्गैर्व्याप्यावतिष्ठते ।
महाविष्णुसमाख्याय नरसिंहाय मङ्गलम् ॥ ४ ॥

सूर्येन्दुवन्हिभज्योतिर्ज्वालया यस्य दीप्यते ।
सर्वदा ज्वलते तस्मै नरसिंहाय मङ्गलम् ॥ ५ ॥

देशाकालाक्षनियमं हित्वा सर्वं प्रपश्यते ।
सर्वतोमुखवाच्याय नरसिंहाय मङ्गलम् ॥ ६ ॥

नमृगाय नमर्त्याय नमातापितृजाय च ।
विचित्रभूमजुष्टाय नरसिंहाय मङ्गलम् ॥ ७ ॥

स्वनामकथनात्स्मृत्या रोगग्रहविषादिकान् ।
विरोधिनो नाशयते भीषणायास्तु मङ्गलम् ॥ ८ ॥

भद्राख्यया श्रिया जुष्टं यमाश्रित्य नरोऽखिलम् ।
भद्रमाप्नोति सततं तस्मै भद्राय मङ्गलम् ॥ ९ ॥

स्वकालप्राप्तमपि यो मृत्युं भक्तस्य नाशयेत् ।
भक्तप्रियाय तस्मै स्यान्मङ्गलं मृत्युमृत्यवे ॥ १० ॥

यच्छेषतापारतन्त्र्ये नम इत्यनुसन्दधत् ।
सर्वमिष्टमवाप्नोति तस्मै नृहरये शुभम् ॥ ११ ॥

त्वद्दास्यं सर्वजन्तूनां स्वरूपानुगुणं ततः ।
मत्स्तुतिं स्वीकृतवते नरसिंहाय मङ्गलम् ॥ १२ ॥

॥ इति श्री नृसिंह मङ्गलम् ॥

---

## * श्रीवामन मंगलम् *

देवानां राज्यलाभाय दैत्यानां तत्प्रहाणये ।
कश्यपाददितेर्गर्भात् प्रसूतायास्तु मङ्गलम् ॥ १ ॥

देवर्षिपितृगन्धर्वनागकिन्नरपूर्वकैः ।
सर्वैरभिष्टुतायास्तु मङ्गलं वामनाय ते ॥ २ ॥

मौञ्जीदण्डाजिनच्छत्रोपवीतकृतलक्ष्मणे ।
वर्णिने रक्तनेत्राय वामनायास्तु मङ्गलम् ॥ ३ ॥

बलियज्ञगतैस्सर्वै ऋत्विग्भिस्सह भार्गवम् ।
वाक्यार्थैर्याज्ञिकैर्जेत्रे वामनायास्तु मङ्गलम् ॥ ४ ॥

रूपेणाप्रतिरूपेण चाटुना वचसा गुणैः ।
मङ्गलं ब्रह्मतेजोभि र्बलिव्यामोहकारिणे ॥ ५ ॥

सर्वस्मै सर्वदा सर्वफलदात्रेऽपि याचते ।
वलिं पदत्रयमितां भूमिं कुब्जाय मङ्गलम् ॥ ६ ॥

सृष्टिपालनसंहारोद्धारणादिभिरात्मनः ।
स्वीयामपि क्षितिं स्वल्पां याचते तेऽस्तु मङ्गलम् ॥ ७ ॥

याचित्वाल्पेन पादेन बृहता मातुमिच्छतः ।
मङ्गलं वामनायास्तु कपटायैव सन्ततम् ॥ ८ ॥

कैतवं चावमानं च रूपान्तरमनाप्य माम् ।
रक्षते स्वेन रूपेण वामनायास्तु मङ्गलम् ॥ ९ ॥

दक्षिणेन करेणाब्जं दधिखण्डं च बिभ्रते ।
रुक्मपात्रेऽन्यहस्तेन पीयूषकलशं शुभम् ॥ १० ॥

वसिष्ठमातङ्गभिदामनपेक्ष्य पदाम्बुजम् ।
धात्रे सर्वस्य शिरसि मङ्गलं ते त्रिविक्रम ! ॥ ११ ॥

इदं विष्णुर्विचक्रमे किंच त्रीणि पदेतिच ।
श्रुतिवाक्यान्यलंकर्त्रे मङ्गलं ते त्रिविक्रम ! ॥ १२ ॥

सत्यसन्धं वलिं कर्तुं तत्कन्यस्तपदाम्बुज ।
मङ्गलं तद्गृहद्वारपालायास्तु श्रियःपते ॥ १३ ॥

॥ इति श्री वामन मङ्गलम् ॥

# ॥ श्रीविष्णु मङ्गलम् ॥

किरीटहारकेयूरकुण्डलादिविभूषणैः ।
विराजते नूपुरान्तै विष्णवे तेऽस्तु मङ्गलम् ॥ १ ॥

शङ्खचक्रगदापद्मशार्ङ्गनन्दकपूर्वकैः ।
आयुधैर्भास्वराङ्गाय विष्णवे तेऽस्तु मङ्गलम् ॥ २ ॥

फुल्लपद्मस्थितत्वात्तु सन्दिग्धचरणाय ते ।
मृदुसुन्दरगात्राय विष्णवे स्यात्सुमङ्गलम् ॥ ३ ॥

पीताम्बरसुसंवीतमेघश्यामलमूर्तये ।
अक्ष्णोरासेचनकृते विष्णवे तेऽस्तु मङ्गलम् ॥ ४ ॥

पुण्डरीकदलाकारशरेणामृतवर्षिणा ।
मामाप्यायायतेऽत्यर्थं विष्णवे तेऽस्तु मङ्गलम् ॥ ५ ॥

स्मितपूर्वेण वचसा स्राविणा करुणाऽमृतम् ।
आह्लादकारिणे नित्यं विष्णवे तेऽस्तु मङ्गलम् ॥ ६ ॥

सौम्यरूपाय तेजोऽभिः कोटिसूर्याभिभाविने ।
श्रीवत्सकौस्तुभश्रीभि र्भास्वते तेऽस्तु मङ्गलम् ॥ ७ ॥

ब्रह्मरुद्रमुखेनैव सृष्टिसंहारकारिणे ।
रक्षित्रे स्वयमेवास्य विष्णवे तेऽस्तु मङ्गलम् ॥ ८ ॥

समस्तचिदचिद्वस्तुव्यापिने परमात्मने
विष्णुशब्दस्य वाच्याय विष्णवे तेऽभ्तु मङ्गलम् ॥ ९ ॥

॥ इति श्रीविष्णु मङ्गलम् ॥

वराहाय नृसिंहाय वामनाय च विष्णवे ।
सुदर्शनाय देवेभ्यः पञ्चभ्यो वोऽस्तु मङ्गलम् ॥

# ॥ श्रीसुदर्शन मङ्गलम् ॥

जयद्रथवधोद्युक्तस्वामिसंकल्परूपिणे ।
कोटिसूर्यप्रकाशाय तेजःपुञ्जाय मङ्गलम् ॥ (१)

अंबरीषव्रतद्रोहि-दुर्वासोगर्वनाशिने ।
स्वभक्तपरतन्त्राय ज्वालमालाय मङ्गलम् ॥ (२)

शम्बरासुरसाहस्र-मायासूदनकारिणे ।
बालप्रह्लादरक्षायां ज्वालामालाय मङ्गलम् ॥ (३)

बाणबाहुस्नुह्विवनच्छिदे तीक्ष्णोग्रनेमये ।
कुतोऽप्यप्रतिरुद्धाय हेतिराजाय मङ्गलम् ॥ (४)

उद्दिष्टसेवाविघ्नार्त-गजेन्द्रसुखहेतवे ।
विध्वस्तप्रतिबन्धाय सहस्राराय मङ्गलम् ॥ (५)

छेत्रे मौरवपाशानां विसेत्रे नरकासुरम् ।
स्वामिकैङ्कर्यधुर्याय वज्रनाभाय मङ्गलम् ॥ (६)

आहर्तुर्वैदिकसुतान् तमोभूमौ स्खलद्गतेः ।
मार्गप्रदर्शिने विष्णोः भूयात् स्वक्षाय मङ्गलम् ॥ (७)

सृष्टिपालनसंहार-क्रियाधुर्याय शार्ङ्गिणः ।
भोगैकहेतवे भर्तुः मङ्गलं ते सुदर्शन ॥ (८)

मालिप्रहरणाघात-पराङ्मुखगरुत्मता ।
अपोढस्य हरेर्युद्धे मानदायास्तु मङ्गलम् ॥ (९)

स्वामिनिन्दासमासक्त-शिशुपालशिरश्छिदे ।
सिद्धाय स्मृतिमात्रेण मङ्गलं क्षिप्रकारिणे ॥ (१०)

काशीराजसमायुक्त-कृत्याविलयकर्मणे ।
काशीनगरदग्धे च वैष्णवास्त्राय मङ्गलम् ॥ (११)

सौभं च तत्पतिं साल्वं दारुक्रकचवत् द्विधा ।
मध्ये बिभेद यस्तस्मै मङ्गलं दहनात्मने ॥ (१२)

द्रोहिद्रौणिप्रार्थितेन दत्तेऽपि त्वयि शौरिणा ।
स त्वां नाशकदादातुं पराधृष्याय मङ्गलम् ॥ (१३)

द्रौणिब्रह्मास्त्रनिर्दग्ध-मृतजातोत्तरासुतम् ।
योऽजीवयत्पुनस्तस्मै सर्वशक्ताय मङ्गलम् ॥ (१४)

स्थापयित्रे परत्वस्य विष्णौ स्ववहनात् प्रभौ ।
अनन्यसाधनायास्तु शस्त्रराज य मङ्गलम् ॥ (१५)

स्वोपासकपराधीन-निखिलात्मक्रियाजुषे ।
अतिवेलदयार्द्राय चक्रराजाय मङ्गलम् ॥ (१६)

बालधन्विकुलोद्भूतशिङ्गरार्यतनूभुवा ।
यद्वद्रिनित्यवासेन वेंकटार्याख्यसूरिणा ॥

तत्तत्पुराणस्थकथा-संग्रहप्रतिपादकम् ।
मङ्गलं चक्रराजस्य भूयात् पादयुगेऽर्पितम् ॥

इति श्री यदुगिरि वाधूलमहार्यपौत्र-श्री नारायणचरणाम्बुज-षट्चरणस्य
" ऐम्बत्तिरुवर् " स्थानीकं " कुप्पण्णा "- (पंडितरत्नम्
श्रीनिवासनरसिंहाचार्य-) स्वामिनां प्रसादासादित-
साहित्यालंकार सांख्ययोगविशिष्टाद्वैतवेदान्त
वैदुष्यस्य सांख्यतीर्थ साहित्यरत्न
जग्गू वेंकटाचार्यस्य कृतिषु
श्री सुदर्शनमङ्गलम् ॥

---

# * श्रीगुरुस्तवः *

श्रीयादवाद्रीशपदानुरक्तो रामानुजाचार्यकृतिष्वभिज्ञः ।
शठारिसूक्त्यर्थरहस्यनिष्ठः साहित्यवेदान्तकलाविदग्धः ॥ १ ॥

सांख्ये च योगे विदितप्रभावे श्रीमन्त्रशास्त्रे च पुराणबृन्दे ।
निवेशितात्मा गुरुपादपद्मे कर्णाटभाषाद्रविडागमज्ञः ॥ २ ॥

पांडित्यगाम्भीर्यकवित्वजुष्टः साहित्यमीमांसनलब्धकीर्तिः ।
रामानुजार्ये च तदीयसंघे विशेषविश्वासकृतानुरागः ॥ ३ ॥

श्रीमद्यतीन्द्रप्रवणप्रभावो गीर्वाणवाण्यां विशदीकृतोऽभूत् ।
धन्यात्मना येन महानुभावं तं वेंकटार्यं शिरसा नमामि ॥ ४ ॥

वेदान्तद्वयसारज्ञं जग्गू-वेंकटदेशिकम् ।
वालधन्विकुलाब्धीन्दुं वन्देऽहं सज्जन-प्रियम् ॥

# ॥ श्रीगुरुस्मृतिसन्ततिः ॥

श्रीमद्यादवशैलनाथ-यतिराट्-तद्भक्तसेवारतः
श्रीमत्कौशिकवंशनायकमणिः श्रीशिङ्गरार्यात्मजः ।
शार्वर्यब्दगकर्कटे शितिदलेऽष्टम्यां रवेर्वासरे
श्रीवैकुण्ठमकुण्ठवैभवमगात् श्रीवेंकटार्यस्सुधीः ॥

* * *

श्रीमुखे मकराश्लेषाजातः श्रीशिंगरात्मजः ।
श्रीमहान्तादि (87) संख्याब्दानुषित्वा यदुभूधरे ॥ १ ॥

वेदवेदान्तबोधिन्यां पपाठापाठयच्च यः ।
वेदान्तद्वयमर्मज्ञः काव्यशास्त्रार्थतत्ववित् ॥ २ ॥

इतिहासपुराणानां तात्पर्यं व्यवृणोन्मुदा ।
यदुशैलस्य नेत्री या भुक्तिमुक्तिप्रदायिनी ॥ ३ ॥

तस्याः श्रीचक्रराजस्य सन्निधौ नृहरेस्तथा ।
यद्वद्रियतिराजस्य तत्सुतस्य हरेः प्रभोः ॥ ४ ॥

स्तोत्रपाठं तथा गानं रसार्द्रंमधुरप्रियम् ।
चक्रे चातोषयद्देवं सूरीन् भागवतान् जनान् ॥ ५ ॥

* * *

शार्वर्यां कर्कटेऽष्टम्यामसिते कृत्तिकाजुषि ।
श्रीमद्यादवशैलाग्रे रात्र्यां चादित्यवासरे ॥
सांख्यतीर्थं वेंकटार्यः शिंगरार्यगुरोस्सुतः ।
शास्त्रविश्वासशाली च प्राप विष्णोः पदं शुभम् ॥

* * *

चराचरगुरोर्विष्णोः श्रीपतेः करुणार्थिनाम् ।
भक्तानां कविरत्नानां कृतीनामनुवादने ॥

बद्धादरेण शिष्येण रचिता स्मृतिसन्ततिः ।
अर्पिता गुरुपादाब्जे प्रीतयेऽस्तु सदा सताम् ॥

आशासनमिदं हार्दं भूविज्ञानविपश्चितः ।
श्रीशानुदासशिष्यस्य श्रीनिवासाख्यशर्मणः ॥

—:*:—

# * भारत कृष्ण मङ्गलम् *

—:0*0:—

भक्तों पर अनुग्रह और उनके शत्रुओं का संहार करने के लिए इस धरातल पर अवतार करनेवाले वासुदेव का मगल हो ॥१॥ जन्मकाल से ही दुःख में डूबे हुए कुंतीसुतों (पंचपांडवों) ने जिनके अनुग्रह से द्रौपदी, राज्य और सुख पाये, ऐसे श्रीकृष्ण का मंगल हो ॥२॥ समस्त कर्म जिनकी आराधना होती है, जो उनके विघ्न दूर करते और अपने भक्तों के श्रीपाद धोते हैं, ऐसे श्रीकृष्ण का मंगल हो ॥३॥ नाथों के (पंच पांडवों के) रहते हुए भी अनाथा की भांति सभा के मध्य खींचो जानेवाली द्रौपदी ने जिनका नामसंकीर्तन करने से रक्षा पायी, उन श्रीकृष्ण का मंगल हो ॥४॥ वनवास करनेवाले पांडवों के प्रति द्रोह करने के लिए दुर्योधन के भेजे हुए दुर्वासमुनि को जिन्होंने लौटा दिया उन श्रीकृष्ण का मंगल हो ॥५॥ समस्त ऐश्वर्य खोकर गरीब होकर अज्ञातवास करनेवाले पांडवों ने जिनके दिये हुए ऐश्वर्य से अभिमन्यु को परिणाया, उन श्रीकृष्ण का मंगल हो ॥६॥ सौलभ्यगुण से परिपूर्ण, परसात् परपांडवों के दूत सिद्धधर्मस्वरूपी (श्रीकृष्ण) का मंगल हो ॥७॥ जिन्होंने अर्जुन के व्याज से हमें संसारनिवृत्ति के लिए समस्त शास्त्रसारभूत गीताशास्त्र का प्रदान किया, ऐसे श्री पार्थ-सारथि भगवान का मंगल हो ॥८॥ भीष्म के बाणों से बहुत पीड़ित होकर, कोप से रथ से कूद कर, पसीजाकर, हाथ म चक्र उठाकर (भीष्म की ओर) दौडनेवाले, धूली से अलंकृत पलकवाले, अपने स्थान से गिरे हुए उत्तरीय के किनारे को

